ननु 'स्थितधीः किं प्रभाषेत' इत्यादेरुत्तरमयं श्लोक इति प्रागुक्तम्। तत्कथमिदानीं लक्षणपरतया व्याख्यातः। अन्यपरादपि तल्लाभ इत्याशयेनेति ब्रूमः। अन्यथा 'किं प्रभाषेत' इत्यादेरुत्तरमाहेत्यत्रैवावक्ष्यत्। किं तत्र स्थानप्रदर्शनादिनेति ॥ ६९ ॥

भ० गी०

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

भा०—

तेन विषयानुभवप्रकारमाह ॥ आपूर्यमाणमिति ॥ यो विषयैरापूर्यमाणोप्यचलप्रतिष्ठो भवति, नोत्सेकं प्राप्नोति, न च प्रयत्नं करोति नचाभावे शुष्यति। न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्त[1]वृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति। स मुक्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥

प्र० दी०—

पृष्टस्य समस्तस्योत्तरमुक्तम्। तत्किमापूर्यमाणमित्यनेनेत्यत आह ॥ तेनेति ॥ क्रियमाणेत्युपस्कर्तव्यम्। नित्यसापेक्षत्वादसामर्थ्याभावः। बाह्यानुसन्धानरहितस्य युज्येतापि कथञ्चिद्गमनादिकम्। विषयानुभवस्तु दृश्यमानः कथं स्यात्। तस्य नियतसाधनसाध्यस्यानुसन्धानेन विनाऽनुदयादित्याशङ्कापरिहारार्थमिति शेषः। "तद्वत्कामा यं प्रविशन्ति" इति सङ्क्षेपेणोक्तं। तद्विवृणोति ॥ य इति ॥ कामशब्दस्यार्थो विषयैरिति। अन्यथा "विहाय कामान्" इत्युत्तर[2]-

1. ग. सरित्प्रवेशाप्रवेशनिमित्तौ

2. ग. इत्युक्तविरोधात् क. इत्युक्तिबिरोधात्

विरोधात्। "अचलप्रतिष्ठं' इत्यस्यैव व्याख्यानं नोत्सेकमित्यादि ॥ कुत एषोऽर्थ इत्यतः समुद्रदृष्टान्तोपादानसामर्थ्यादिति भावेनाह ॥ न हीति ॥ 'स शान्तिमाप्नोति' इत्यस्यार्थमाह ॥ स इति ॥ ज्ञानिप्रशंसार्थमेतत्। एतद्दृष्ट्वा केचित् 'ज्ञानिन एव मुक्तिरित्यनेनाह' इत्याहुः। तदसत्। गतार्थत्वात् ॥ ७० ॥

**भ० गी०—**

**विहाय कामान् यः सर्वान् पुमान् चरति निःस्पृहः।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१ ॥**

**भा०—**

एतदेव प्रपञ्चयति ॥ **विहायेति ॥** कामान् विषयान्। निःस्पृहतया विहाय यः चरति भक्षयति। भक्षयामीत्यहङ्कारममकारवर्जितश्च। स हि पुमान्। स एव च मुक्तिमधिगच्छतीत्यर्थः ॥७१॥

**प्र० दी०—**

'विहाय' इत्यनेनायमेवार्थ उच्यते। अतः पुनरुक्तिरित्यत आह ॥ एतदेवेति ॥ यद्यत्र कामा इच्छाविशेषास्तर्हि "निःस्पृहः' इति पुनरुक्तिः। यदि काम्यन्त इति विषयास्तदा चरतिर्यदि भक्षणार्थः तदा व्याघातः। अथ गत्यर्थस्तदा व्यर्थ इत्यतो व्याचष्टे ॥ कामानिति ॥ 'निर्ममो निरहङ्कारः' इत्येतदसम्भवपरिहाराय व्याचष्टे ॥ भक्षयामीति ॥ कर्तृत्वाभिमान एवाहङ्कारः। स्वामित्वाभिमान एव ममता। नत्वहंप्रत्ययादिमात्रमिति भावः। स हि पुमानन्यः पशुरित्यर्थः। कुत इत्यत आह ॥ स एवेति ॥ स हि पुमानित्यनेनान्वयसमाप्तिं वदता ज्ञानिन एव मुक्तिरित्येषोऽर्थो नात्र प्रतिपाद्यत इति दर्शितम्। स्त्रीव्यावृत्त्यभावश्च ॥ ७१ ॥

भ० गी०—

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति

॥ ७२ ॥

॥ ॐ तत्सदिति भगवद्गीतासूपनिषत्सु योगशास्त्रे श्रीकृष्णार्जुन-
संवादे साङ्ख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

भा०—

उपसंहरति ॥ **एषेति** ॥ ब्राह्मी स्थितिः ब्रह्मविषया स्थितिः । लक्षणम् । अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति । अन्यथा जन्मान्तरं प्राप्नोति । 'यं यं वाऽपि' इति वक्ष्यमाणत्वात् । ज्ञानि-नामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम् । 'भोगेन त्वितर' इति ह्युक्तम् । सन्ति हि बहुशरीरफलानि कर्माणि । 'सप्तजन्मानि विप्रस्स्यात्' इत्यादेः । दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम् ।

'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रौद्रं[1] पदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः' ॥

इति गारुडे ।

'महादेव परेजन्मंस्तव मुक्तिर्निरूप्यते'

इति नारदीये । निश्चितफलं च ज्ञानम् । 'तस्य तावदेव चिरं', 'यदु च नार्चिषमेवाभिसम्भवति' इत्यादिश्रुतिभ्यः ।

प्र० दी०—

ज्ञानी स्तूयत 'एषा' इत्यनेनेत्यसत् । प्रथमवाक्ये तद्दर्शनादिति

1. ग. रुद्रपदं गतः श्रूयते

भावेनाह ॥ उपसंहरतीति ॥ प्रकरणं समापयतीत्यर्थः। ब्रह्मधर्मभूतेति प्रतीतिनिरासायाह ॥ ब्राह्मीति ॥ स्थितिर्नोक्ता। तत्कथमेवमुच्यत इत्यत आह ॥ लक्षणमिति ॥ ब्रह्मविषयज्ञानवतो लक्षणमुक्तमित्यर्थः। 'किं प्रभाषेत' इत्यादिप्रश्नपरिहारस्यार्थादुक्तत्वादनुपसंहारः।

'अन्तकाले चरमे वयस्यपि यः परिव्रज्यास्यां स्थितौ तिष्ठति सोऽपि ब्रह्माप्नोति। किमु ब्रह्मचर्यादेव प्रव्रज्य' इति व्याख्यानमसत्। अप्रकृतत्वादित्याशयवान् व्याचष्टे ॥ अन्तकालेऽपीति ॥ ज्ञानिनो ब्रह्मप्राप्तिरुक्ता। सा किं तद्देहपातानन्तरमेवोतान्यथेत्यपेक्षायामिदमुच्यते। कुतोऽस्यार्थस्य भगवदभिप्रेतत्वमित्यत आह ॥ यं यमिति ॥

ननु ज्ञानमेव मोक्षसाधनम्। कारणपौष्कल्ये च कार्यं भवत्येव। अतः कथं ज्ञानिनः शरीरान्तरप्राप्तिरित्यत आह ॥ ज्ञानिनामपीति ॥ प्रारब्धकर्म सामग्र्याः प्रतिबन्धकम्। तदेवान्तकाले ब्रह्मानुसन्धानं प्रतिबध्नातीति भावः। ननु ज्ञानादेव सर्वं कर्म क्षीणमित्यत आह ॥ भोगेनेति ॥ अस्तु प्रारब्धकर्मणां भोगादेव क्षयः। स च ज्ञानं यच्छरीरे जातं तत्रैवाभूत्। अतः कथं शरीरान्तरारम्भ इत्यत आह ॥ सन्ति हीति ॥ तानि कथमेकेनैव शरीरेण भुज्येरन्निति शेषः। सप्तजन्मनीति द्विगुः। इतश्चैतदेवमित्याह ॥ दृष्टश्चेति ॥ बह्वित्यनेकोपलक्षणम्। कथं ज्ञानिनां बहुशरीरप्राप्तिर्दृश्यत इत्यत आह ॥ तथा हीति ॥ ननु ज्ञानिनोऽपि यदि शरीरान्तरप्राप्तिस्तर्हि गर्भवासादिदुःखैर्विलुप्तशक्तिकं ज्ञानं न मोक्षाय पर्याप्तं स्यादित्यत आह ॥ निश्चितेति ॥ तस्य ज्ञानिनः। तावदेव चिरम्। तावानेव विलम्बः। यावन्न विमोक्ष्ये विमोक्ष्यते। प्रारब्धेन कर्मणा। अथावसिते कर्मणि। ब्रह्म सम्पत्स्यत इत्यर्थः। अवसितकर्मणि ज्ञानिनि विषये पुत्रादयो यदि शव्यं कर्म कुर्वन्ति यदु च न यदि वा न कुर्वन्ति। सर्वथार्चिषमभिसम्भवति प्राप्नोत्येवेत्यर्थः। तदिदमुक्तं नैनां प्राप्य विमुह्यतीति ॥

भा०—

न च कायव्यूहापेक्षा। 'तद्यथेषीकातूलं', 'तद्यथा

पुष्करपलाशे', 'ज्ञानाग्निस्सर्वकर्माणि', इत्यादिवचनेभ्यः। प्रारब्धे त्वविरोधः। प्रमाणाभावाच्च। न च तच्छास्त्रं प्रमाणम्।

'अक्षपादकणादानां साङ्ख्ययोगजटाभृताम्।
मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः॥'

इति निन्दनात्[1]। यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव। न सत्यत्वम्। न हि तेषामपीतरग्रन्थविरुद्धार्थे प्रामाण्यम्। तथा ह्युक्तं—

'एष[2] मोहं सृजाम्याशु यो जनान् मोहयिष्यति।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय॥'
'अतथ्यानि वितथ्यानि दर्शयस्व महाभुज।
प्रकाशं[3] कुरुचात्मानमप्रकाशं च मां कुरु॥'

इति वाराहे।

'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः।
चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः॥
दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु।
चक्रुर्वेदैश्च ब्राह्माणि वैष्णवान्[4] विष्णुवेदतः।
पञ्चरात्रं भारतं च मूलरामायणं तथा।
तथा पुराणं भागवतं विष्णुवेद इतीरितः।
अतः शैवपुराणानि योज्यान्यन्याविरोधतः॥'

इति नारदीये।

अतो ज्ञानिनां भवत्येव मुक्तिः।

---

1. ग. निन्दावचनात्
2. 3. अ. 'एष मोहं' इति श्लोकार्धं 'प्रकाशं कुरु' इति श्लोकार्धं च न दृश्यते
4. ग वैष्णवाः

प्र० दी०—

पाशुपतवैशेषिकादयस्त्वाहुः—अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात् समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वाऽपवृज्यते। तत्कुतोऽस्य देहान्तरमिति। तत्राह॥ न चेति। ज्ञानिनः कर्मक्षयार्थमिति शेषः। तथाहि। अप्रारब्धकर्मक्षयार्थं वा सा स्यात्। प्रारब्धक्षयार्थं वा। नाऽद्यः। तेषां ज्ञानेनैव क्षीणत्वादिति भावेनाह॥ तद्यथेति॥ द्वितीये तु यः कश्चिज्ज्ञानी तथा करोति, सर्वो वा। आद्ये सम्प्रतिपत्तिमुत्तरमाह॥ प्रारब्धे त्विति॥ द्वितीयासम्भवे हेतुमाह॥ प्रमाणेति॥ चशब्दात्प्रागुदाहृतप्रमाणविरोधाच्च। पाशुपतादिशास्त्रेषु तथोक्तत्वात्कथं प्रमाणाभाव इत्यत आह॥ न चेति॥ तच्छिष्या अपि तच्छब्देनोच्यन्त इति बहुवचनम्।

"उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणस्सुतः।
उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः॥"

इत्यादौ तत्स्तुतिरपि दृश्यत इत्यत आह॥ यत्र त्विति॥ वैष्णवशास्त्रोक्तप्रकारेण शिवभक्तानाम्। लक्षणयेति शेषः। सत्यत्वं तदुक्तार्थस्येति शेषः। उक्तनिन्दाविरोधादिति भावः। तर्हि शैवपुराणानि कायव्यूहनिर्माणनियमादौ प्रमाणानीत्यत आह॥ न हीति॥ तेषामिति बुद्धिस्थशैवपुराणपरामर्शः। इतरग्रन्था उदाहृतगारुडादयः।

शैवपुराणानां गारुडादिवैष्णवग्रन्थानां च को विशेषो येन बाध्यबाधकभाव इत्याशङ्क्य, दुर्जनव्यामोहनार्थप्रणीतपाशुपतादिमूलानि शैवपुराणानि, सम्यग्ज्ञानार्थप्रणीतपञ्चरात्राद्यनुसारिणो गारुडादिग्रन्था इत्याशयवान् पाशुपतादिशास्त्राणां मोहनार्थत्वे तावत्प्रमाणमाह॥ तथा हीति॥ कारयेति स्वार्थे णिच्। अतथ्यानि सर्वथाऽप्यविद्यमानानि। वितथ्यानि व्यधिकरणानि च तेषु दर्शयस्व। प्रकाशं प्रसिद्धम्। इदानीं तन्मूलत्वं शैवपुराणानामितरेषां पञ्चरात्रादिमूलत्वमित्यत्र प्रमाणमाह॥ कुत्सितानीति॥ तच्छास्त्रसमयेन तच्छास्त्रसिद्धान्तमनुसृत्य। वेदैरिति वेदानामापातप्रतीतिमनुसृत्य। भागवतं

भगवद्विषयम्। उक्तमुपसंहरति॥ अत इति॥ ज्ञानिनां मुक्तिर्भवत्येव। न तु तद्देहपातानन्तरमिति नियम इत्युपसंहारार्थः।

भा०—

भीष्मादीनां तत्क्षणे युक्त्यभावः। स्मरन् त्यजतीति वर्तमाना[1]पदेशो हि कृतः। तच्चोक्तम्—

'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा।
विष्णुमाया तदा तेषां मनो बाह्यं करोति हि॥'

इति गारुडे। न चान्येषां तदा स्मृतिर्भवति।

'बहुजन्मविपाकेन[2] भक्तिज्ञानेन ये हरिम्।
भजन्ति तत्स्मृतिं त्वं ते देवो याति न चान्यथा॥'

इत्युक्तेर्ब्रह्मवैवर्ते।

प्र० दी०—

ननु भीष्मादयो ज्ञानिनोऽन्तकाले ब्राह्म्यां स्थितौ स्थिताश्च न मुक्ताः। तत्कथमेतदुक्तमित्यत आह॥ भीष्मादीनान्त्विति॥ साक्षाद्देहत्यागक्षणे। युक्त्या परमेश्वरे मनोयोगेन भाव्यमित्येव कुत इत्यत आह॥ स्मरन्निति॥ 'यं यं वाऽपि' इत्यत्र। भीष्मादीनां तस्मिन् क्षणे युक्त्यभाव इत्येतत्कुत इत्यत आह॥ तच्चेति॥ ननु तत्क्षणे युक्त्या मुक्तिश्चेदज्ञानिनामपि तत्सम्भवेन मुक्तिप्रसक्तिरित्यत आह॥ न चेति॥ भक्तिज्ञानेनेति द्वन्द्वैकवद्भावः। भक्तिसहितं ज्ञानं भक्तिज्ञानमिति वा।

भा०—

निर्वाणमशरीरम्। 'कायो वाणं शरीरं च' इत्यभिधानात्। 'एतद्वाणमवष्टभ्य' इति प्रयोगाच्च। निर्वाणशब्दप्रतिपादनं 'अनिन्द्रियाः' इत्यादिवत्। कथमन्यथा सर्वपुराणादिप्रसिद्धा कृतिर्भगवत उपपद्यते[3]। न चान्यद्भगवत उत्तमं ब्रह्म।

---

1. ग. वर्तमानव्यपदेशो 2. अ. बहुजन्मविपक्वेन 3. अ. उपपद्येत

*

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।'

इति भागवते।

"भगवन्तं परं ब्रह्म परं ब्रह्म[1] जनार्दनः[2]।"

"परमं यो महद्ब्रह्म।" "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।" "योऽसावतीन्द्रियग्राह्यः।" "नास्ति नारायणसमं न भूतं न भविष्यति।" "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः।" इत्यादिभ्यः। न च तस्य ब्रह्मणोऽशरीरत्वादेतत्कल्प्यम्। तस्यापि शरीरश्रवणात् 'आनन्दरूपं[3]', 'सुवर्णज्योतीः[4]' 'दहरोऽस्मिन्नन्तराकाश' इत्यादिषु। यदि रूपं न स्यादानन्दमित्येव स्यात्। न त्वानन्दरूपमिति। कथं[5] च सुवर्णरूपत्वं स्यादरूपस्य। कथं[6] च दहरत्वम्। दहरस्थश्च 'केचित् स्वदेह' इत्यादौ रूपवानुच्यते। 'सहस्रशीर्षा पुरुषः', 'रुक्मवर्णं कर्तारं', 'आदित्यवर्णं तमसः परस्तात्', 'सर्वतः पाणिपादं तत्', 'विश्वतश्चक्षुः' इत्यादिवचनात्, विश्वरूपाध्यायादेश्च रूपवानवसीयते।

प्र० दी०—

ब्रह्मनिर्वाणं ब्रह्मस्वरूपानन्दमिति व्याख्यानं सर्वप्रमाणविरुद्धमित्याशयवान्निर्वाणमिति भिन्नं पदं व्याचष्टे॥ निर्वाणमिति॥ कथमेतदित्यत आह॥ काय इति॥ कार्यब्रह्मव्यावृत्त्यर्थमेतत्। अनेन ब्रह्मणो निराकारत्वं प्राप्तम्। तत्प्रतिषेधार्थमाह॥ निर्वाणेति॥ प्रतिपादनं व्याख्यानम्। इत्यादिवदित्यादेरिव। प्राकृतादिविग्रहराहित्यार्थत्वेनेत्यर्थः।

किमनेन व्याख्यानेन। निराकारमेव ब्रह्म किं न भवेदित्यत आह॥ कथमिति॥ भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव।

---

1. ग. परंब्रह्मन्
2. अ. ग जनार्दन
3. अ. ग. आनन्दरूपममृतं
4. ग. सुवर्णज्योतिः
5. ग. कथं सुवर्णरूपत्वं
6. ग. कथं दहरत्वं

न च भगवानेव ब्रह्म। तस्य तदुत्तमत्वेन ततोऽन्यत्वात्। अतो न पुराणादिविरोध इत्यत आह ॥ न चेति ॥ महद्ब्रह्मेत्यन्तानि वाक्यानि भगवतो ब्रह्मत्वप्रतिपादकानि। यस्मादित्यादीनि तस्यैव सर्वोत्तमत्वेन तदुत्तमाभावप्रतिपादकानि। इन्द्रियग्राह्यमतिक्रान्तः तदुत्तमः। सर्वमेव योगीन्द्रियग्राह्यम्।

उत्तमाधमभावेन ब्रह्मेश्वरयोर्भेदो माभूत्। ब्रह्माशरीरम्। ईश्वरस्तु सविग्रह इत्यतो भेदोऽस्तु। अभेदस्यापि सत्त्वाद्ब्रह्मशब्दोपपत्तिरित्यत आह ॥ न चेति ॥ तस्य पराभिमतस्य। एतत् भगवतोऽन्यत्वम् ॥ कुत इत्यत आह ॥ तस्यापीति ॥ "दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं" इत्यन्तं वाक्यमिह विवक्षितम्। इत्यादिषु ब्रह्मविद्यात्वेन सम्मतेष्विति शेषः। कथमत्र शरीरश्रवणमित्यत आह ॥ यदीति ॥ रूपं विग्रहः। "विज्ञानमानन्दं ब्रह्म" इत्यानन्दशब्दस्य नपुंसकत्वदर्शनात् तथोपादानम्। ज्योतिःशब्दो भास्वर[1]रूपस्य वाचकः। अत उक्तं सुवर्णरूपत्वमिति। दहरत्वं दहरस्थत्वम्। अविग्रहस्येति वर्तते। दहरस्थत्वं कथमविग्रहस्यानुपपन्नमित्यत आह ॥ दहरस्थश्चेति ॥ एवमुपपत्तिसापेक्षाणि वाक्यान्युदाहृत्य स्पष्टान्यप्युदाहरति ॥ सहस्रेति ॥ अवसीयते परमात्मा।

भा०—

अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्द[2]श्रीशक्त्यादिमांश्च भगवान्।
"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"
"यः सर्वज्ञः", "आनन्दं ब्रह्मणः"
"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति"
"अनादिमध्यान्तमनन्तवीर्यं सहस्रलक्षामितकान्तिकान्तम्[3]।"

---

1. क. भास्वरूपस्य
2. ग. . . . . . . वीर्यानन्दयशश्श्रीशक्त्यादिमान्
3. अ. सहस्रलक्षामितकान्तिकान्त

"मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे।"

"विज्ञानशक्तिरहमासमनन्तशक्तेः।"

"तुर्यं तु[1] सर्वदृक् सदा" "आत्मानमन्यं च स वेद विद्वान्।

"अन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" "ऐश्वर्यस्य समग्रस्य।"

"अतीवपरिपूर्णं ते सुखं ज्ञानं च सौभगम्।
यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः॥"

इत्यादिभ्यः[2]।

प्र० दी० —

प्राक् भगवतोऽन्यस्योत्तमत्वं वाक्यविरुद्धमित्युक्तम्। इदानीं व्याहतं च तदिति भावेनाह॥ अतीति॥ अत्यादिशब्दैः निरतिशयत्वं द्योत्यते। ऐश्वर्यं वशित्वम्। श्रीः कान्तिः। परमेश्वरे भगवच्छब्दस्यौपचारिकत्वपरिहारायैषां गुणानां सद्भावे प्रमाणान्याह॥ पराऽस्येति॥ "आनन्दं ब्रह्मणः" इत्यत्र "यतो वाचः" इति पूर्ववाक्यमप्यभिप्रेतम्। अमितशब्दात् परं चन्द्रशब्दोऽध्याहार्यः। द्रष्टृपुरुषयोग्यताभेदात् त्रिधोक्तिः। ऐश्वर्याद्यनन्तगुणत्वे 'मयि' इति प्रमाणम्। सङ्ख्यापरिमाणाभ्यां गुणानामानन्त्यमनेनोच्यते। शक्तेः परत्वं प्रागुक्तम्। तदस्पष्टमित्यतो॥ विज्ञानेति॥ ज्ञानस्यापरोक्षरूपताप्रतिपादनाय॥ तुर्यमिति॥ ईश्वरो नात्मानं वेत्ति, कर्तृकर्मभावविरोधादित्येतन्निरासाय॥ आत्मानमिति॥ ईश्वरे भगवच्छब्दस्यौपचारिकत्वासम्भवं प्रदर्शयितुं तदन्यस्य तच्छब्दार्थतानिरासाय॥अन्यतम इति॥ अन्य एवान्यतमः। भगवच्छब्दस्याय[3]मर्थ इत्यत्र ऐश्वर्यस्येति प्रमाणम्। अत्र षण्णामित्युपलक्षणम्। षाड्गुण्ये सर्वगुणान्तर्भावो वा। तद्वान् भगवानिति सिद्धमेव। भगवत्त्वात् स एव सर्वोत्तम इति। समग्रार्थेऽतीवेति। यदन्येन करिष्यामीति स्मर्तुं बुद्धिस्थीकर्तुं वाऽयुक्तं[4]। तच्च त्वं कर्तुं शक्तः।

1. अ. तुर्यं तत् 2. अ. इत्यादिभ्यो ब्राह्मे 3. क. अयमेवार्थः
4. क. अशक्यम्

भा०—

"तानि सर्वाण्यन्योन्यरूपाणि[1]"। "विज्ञानमानन्दं ब्रह्म", "आनन्दो ब्रह्मेति व्यजानात्", "सत्यं ज्ञानमनन्तं ब्रह्म", "यस्य ज्ञानमयं तपः", "समा भग प्रविश स्वाहा",

"न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसम्भवा।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः।
सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः॥"

इति पैङ्गिखिलेषु।

"देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम्"॥

इत्यादि ब्रह्मवैवर्ते। तदेव लीलया चासौ[2] परिच्छिन्नादिरूपेण दर्शयति मायया।

"न च गर्भेऽवसद्देव्या न चापि वसुदेवतः।
न चापि राघवाज्जातो नचापि जमदग्नितः।
नित्यानन्दोऽव्ययोऽप्येवं क्रीडते मोघदर्शनः॥"

इति पाद्मे।

"न वै स आत्माऽत्मवतामधीश्वरो
भुङ्क्ते हि दुःखं भगवान् वासुदेवः।"

"सर्गादे[3]रीशिताऽजः परमसुखनिधिर्बोधरूपोऽप्यबोधं
लोकानां दर्शयन् यो मुनिसुतहृतात्मप्रियार्थे जगाम"

"स ब्रह्मवंद्यचरणो[4] जनमोहनाय
स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार।"

---

1. अ. अन्योन्यस्वरूपाणि 2. अ. चशब्दो न श्रूयते 3. ग. स्वर्गादेः
4. अ. 'ब्रह्मवन्द्यचरण' इत्यतः परं 'नरवत् प्रलापी' इत्यधिकः पाठः। 'जनमोहनाय' इति न दृश्यते च।

"पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् ।
रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः ।
योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह ।
न चाम्बां ग्राहयामास करुणः कोऽपरस्ततः ॥"

इत्यादि[1] स्कान्दे । न तत्र संसारधर्मा निरूप्याः । यत्र परावर-भेदोऽवगम्यते तत्राज्ञबुद्धिमपेक्ष्यावरत्वं विश्वरूपमपेक्ष्यान्यत्र । तच्चोक्तं—

"परिपूर्णानि रूपाणि समान्यखिलरूपतः ।
तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि ।
परावरं वदन्त्येव ह्यभक्तानां विमोहनम्[2] ॥"

इति गारुडे । न चात्र किञ्चिदुपचारादिति[3] वाच्यम् । अचिन्त्य-शक्तेः । पदार्थवैचित्र्याच्चेत्युक्तम् ।

"कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।
न चाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि ॥"

इत्यादेश्च नारदीये । तस्मात् सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञानृच्छतीति सिद्धम् ॥ ७१ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

प्र० दी०—

मतुपा ज्ञानादीनां भगवतो भेदः प्रतीतः । षण्णामित्यादिना परस्परं च । तथा "आकृतिर्भगवतः" इत्युक्त्याऽऽकृतेश्च । तन्नि-रासार्थमाह ॥ तानीति ॥ तत्र प्रमाणान्याह ॥ विज्ञानमिति ॥ तप

1. अ. 'इत्यादिभ्यश्च स्कान्दे न तत्र संसारधर्माः निरूप्याः' इत्येकमेव वाक्यम्
2. अ. विमोहने 3. अ. उपचारतादि

आलोचनक्रिया। ज्ञानमयं ज्ञानात्मकमिति धर्माणां परस्परभेदोक्तिः। प्राकृतेति ङीबभावः छान्दसः। अणञ्भ्यामन्यो वा प्रत्ययः। मांसमेदोऽस्थिभिः सम्भवो यस्याः सा तथोक्ता। एतच्च न योगित्वात्। किन्त्वीश्वरत्वात्। अत एव विभुः। निर्दोषगुणात्मकविग्रहादच्युतः। "ज्ञानज्ञानः" इत्यादेरतिशयितज्ञानादिरित्यर्थः। तेन निर्दोषत्वादिना।

भगवद्रूपस्यैवं भावे कथं परिच्छिन्नत्वम्। गर्भवासादिसंसारिधर्माश्च तत्र दृश्यन्त इत्यत आह॥ तदेवेति॥ किमर्थमित्यत उक्तं लीलयेति॥ मायया व्यामोहकशक्त्या। अत्र प्रमाणमाह॥ न चेति॥ देव्या देवक्याः। एवं गर्भवासादिप्रदर्शनेन। मोघं दर्शनं यस्मिन् विषये स तथा। आत्मवतां भागवतानाम्। आत्मा निरुपाधिकप्रिय इति यावत्। मुनिसुतो रावणः। ब्रह्मवाक्यवद्रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम्। करुणः करुणावान्। (अर्श आदित्वादच्) 'तदेव' इत्याद्युक्तमुपसंहरति। न तत्रेति॥ अत इत्युपस्कर्तव्यम्।

यद्येवं तर्हि विश्वरूपं परं, तदपेक्षया कृष्णादिरूपाण्यवराणीति कथं ग्रन्थेषूच्यत इत्यत आह॥ यत्र चेति॥ यत्र ग्रन्थे। तत्र विश्वरूपमपेक्ष्यान्यत्र कृष्णादाववरत्वमज्ञबुद्धिमपेक्ष्योक्तं ज्ञातव्यमित्यर्थः। कुत एतदित्यत आह॥ तच्चेति॥ अखिलरूपतोऽखिलधर्मैः। विमोहनं कर्तुम्। नन्वयमुपचारो वा स्तुतिर्वा किं न स्यादित्यत आह॥ न चेति॥ असम्भवे ह्येषा कल्पना। अचिन्त्यशक्त्यैकस्यैवानेकपरिमाणत्वादिकं सम्भवति। अन्यत्रादर्शनेन त्वपलापेऽतिप्रसङ्ग इत्यर्थः। अत्रैव प्रमाणमाह॥ कृष्णेति॥ विमोहसि विमोहयसि। श्लोकार्थमुपसंहरति॥ तस्मादिति॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वितीयोऽध्यायः ॥२॥

---

## ॥ अथ तृतीयोऽध्यायः ॥

भ० गी०—

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

भा०—

॥ हरिः ॐ ॥ आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेनाकर्म विनिन्द्य कर्म विधीयत उत्तराध्याये ।

कर्मणो ज्ञानमत्युत्तममित्यभिहितं भगवता 'दूरेण ह्यवरं कर्म' इत्यादौ । एवं चेत्किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तधर्मान् विहायेत्याह[1] ॥ ज्यायसीति ॥ कर्मणः सकाशाद् बुद्धिर्ज्यायसी चेत्ते तव[2] मता तत्तर्हि ॥ १ ॥ २ ॥

प्र० दी०—

॥ हरिः ॐ ॥ पूर्वोत्तराध्यायेभ्योऽस्य भेदं, स्वस्मिन्नेकवाक्यतां च दर्शयन्नेतदध्यायप्रतिपाद्यमर्थं पूर्वाध्यायार्थसङ्गतत्वेन विवक्षुः तत्प्रतिपाद्यं तावदाह ॥ आत्मेति ॥ जीवेश्वरस्वरूपं साङ्ख्याख्यमित्यर्थः । ज्ञानसाधनमात्मज्ञानसाधनं योगाख्यम् । पूर्वत्र पूर्वस्मिन्नध्याये । न चैवं द्वितीयाध्यायस्यैक्यानुपपत्तिः । साधनस्यैव प्राचुर्यात् । प्रचुरेण च व्यपदेशात् । तथा च सप्तमादौ वक्ष्यति "साधनं प्राधान्येनोक्तमतीतैरध्यायैः" इति । 'आत्मस्वरूपं' इत्यादि तु प्रकरण-

---

1. अ. ग. विनेत्याह 2. अ. 'तव' इति न श्रूयते

भेदप्रदर्शनायोक्तमिति। एतत्सङ्गतत्वेन तृतीयाध्यायार्थमाह॥ ज्ञानेति॥ योगो द्विविधः। कर्मसमाधिभेदात्। तत्र तावज्ज्ञानसाधनत्वेन कर्म विधीयते कर्तव्यमेवेति ज्ञाप्यते कैश्चन वाक्यैः। अकर्म कर्माकरणम्। विनिन्द्य अस्मिन्नध्याये। अकर्मनिन्दाऽपि कर्मविध्यर्थेत्येकार्थता। तथापि प्रकरणभेदार्थमेवमुक्तम्। ज्ञानसाधनत्वेनेति वदता मोक्ष-साधनता निरस्ता। तेन प्रश्नप्रतिवचनापव्याख्यानमप्यपहस्तितम्। आनन्दवृद्ध्यर्थता त्वनुज्ञायत एव। बीजं प्रदर्शयन् प्रश्नवाक्यतात्पर्य-माह॥ कर्मण इति॥ आदिपदेन "कृपणाः फलहेतवः" इत्यादे-र्ग्रहणम्। घोरे रागद्वेषाद्युपेते। अत्रोभयत्र कर्मशब्देन काम्यं कर्माभि-प्रेतम्। निवृत्तधर्मान् निष्कामधर्मान्। यत्याश्रमविहितान् शमदमा-दीन्। अत्र "कर्मणि किमिति नियोजयसि" इत्येकः प्रश्नः। "घोरे" इति द्वितीय इत्यवधेयम्।

इदमुक्तं भवति। आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च कर्माणि काम्यान्येव। फलश्रवणात् "सर्वे एते पुण्यलोका भवन्ति" इत्यादि। तथाऽत्रापि "हतो वा प्राप्स्यसि स्वर्गं" इत्यादि। चतुर्था-श्रमविहितानि शमदमादीन्यकाम्यानि। फलाश्रवणात्। "शान्तो दान्तः" इत्युपक्रम्य "आत्मानं पश्येत्" इति ज्ञानार्थत्वश्रवणाच्च। ज्ञानं च काम्यात् कर्मणोऽत्युत्तममित्यभिहितम्। ततश्च काम्ये कर्मणि युद्धे "युध्यस्व भारत" इति नियोजनमयुक्तम्। किन्तु चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम्। ननु युद्धमपि "कर्मबन्धं प्रहास्यसि" इत्युक्तत्वाज्ज्ञानार्थं भवतीति मतम्। तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमिवापद्यते। अथैवं मतम्। युद्धादीनि कर्माणि काम्यान्यकाम्यानि च। तत्र यः सकामः तं प्रति 'हतो वा' इत्याद्युक्तम्। यः पुनर्ज्ञानार्थी तमुद्दिश्य 'कर्मण्येवाधिकारः' इत्युक्तम्। तत्र का व्यामिश्रतेति। तथापि शुद्धेषु निवृत्तलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव। तत्र मनोविक्षेपाभावात्। अत्र तद्भावादिति। किं च कामक्रोधादीनां नरकफलत्वमुक्तम्। युद्धे च कामादयोऽवर्जनीयाः। ततोऽपि तत्र नियोजनमयुक्तम्। नन्वस्योत्तरं

"सुखदुःखे समे कृत्वा" इत्युक्तम्। सत्यम्। तथापि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठेये[1] युद्धे नियोजनमयुक्तमेवेति।

प्रथमश्लोके पदानां व्यवहितत्वादन्वयं दर्शयन् किञ्चिद्व्याचष्टे ॥ कर्मण इति ॥ षष्ठीभ्रान्तिनिरासाय 'सकाशात्' इत्युक्तम्। बुद्धिरात्मज्ञानम्। ज्यायसी प्रशस्ततरा ॥ १ ॥ २ ॥

**भ० गी०—**

**श्रीभगवानुवाच—**

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

भा०—

ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात्त्वं कर्मण्येवाधिकृत इति तत्र नियोक्ष्यामीत्याशयवान् भगवानाह ॥ **लोक इति** ॥ द्विविधा अपि जनास्सन्ति। गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत्। तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत्। मद्धर्मस्था एवेत्यर्थः। साङ्ख्यानां ज्ञानिनां सनकादीनाम्। योगिनामुपायिनां जनकादीनाम्। ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः। निष्ठा स्थितिः। त्वं तु जनकादिवत्सकर्मैव ज्ञानयोग्यो न तु सनकादिवत्तत्त्यागेनेत्यर्थः। सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव। तथा ह्युक्तम् "ईश्वरेच्छया विनिवेशितकर्माधिकारः" इति (भा. ५-१-२३) ॥ ३ ॥

प्र० दी०—

एवं चेत्प्रश्नस्तर्हि कथं परिहारवाक्यं सङ्गच्छते। तत्र निष्ठाद्वैविध्यकथनादित्यतस्तदभिप्रायं वदन्नवतारयति ॥ ज्यायस्त्वेपीति ॥ बुद्धिः काम्यकर्मभ्यो ज्यायसीति यदुक्तं तत्तथैवेत्यर्थः[2]।

---

1. अ. अशक्यानुष्ठाने 2. ग. "इत्यर्थः" इति न श्रूयते

तथापि त्वां तत्रैव वैकल्पिके युद्धादिकर्मणि प्रेरयामि। कुतः? आधिकारिकत्वात्। त्वं कर्मण्यपि विक्षेपकारिण्यपि वैकल्पिकेऽधिकृत इति कृत्वा।

अयमत्रोत्तरक्रमः। आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि। किन्तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवन्ति। अतो बुद्धेः काम्यकर्मणो ज्यायस्त्वेऽपि युद्धस्य बुद्ध्यर्थत्वसम्भवात्तत्र नियोगो नानुपपन्नः। यतिधर्मान्विना किमेतेन नियोगेनेति चेदनधिकारिकाणामेव यत्याश्रमस्वीकारो नाधिकारिकाणाम्। तैर्गृहस्थाद्याश्रममपरित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानीतीश्वरनियमात्तव चाधिकारिकत्वादिति। "स्वराद्यन्तोपसृष्टाच्च" इति कात्यायनवचनमनित्यम्। अत एव न पाणिनिरभाणीत्। अयमाशयः श्लोकात्कथं लभ्यत इत्यतो व्याचष्टे॥ द्विविधा अपीति॥ निष्ठा द्विविधेति व्याख्याने क्रमेणैकस्यैव पुरुषस्य तत्सम्भवान्नोक्ताभिप्रायो लभ्यत इत्येवं व्याख्यानम्। न केवलमेकविधाः साङ्ख्या एवेत्यपेरर्थः। द्वैविध्यमेव सोदाहरणमाह॥ गृहस्थादीति॥ यत्याश्रमपरिग्रहेणेत्यपि ग्राह्यम्। ज्ञाननिष्ठा यत्याश्रमविहितैरेव कर्मभिर्ज्ञानसाधने[1]ऽभियुक्ताः। सनकादिभिस्तुल्यं वर्तन्त इति सनकादिवत्। एवं जनकादिवदित्यपि। तत्स्था एव गृहस्थाद्याश्रमस्था एव। तद्धर्मैर्युद्धादिभिर्ज्ञानसाधनेऽभि[2]युक्ताः। द्विविधा अपि जनास्सन्तीत्युक्ते कर्ममार्गस्था ज्ञानमार्गस्थाश्चेति द्वैविध्यं प्रतीयते। तन्निवृत्त्यर्थमाह॥ मद्धर्मेति॥ ज्ञानमार्गस्था एव। ततश्च मद्धर्मस्था एव जना द्विविधा अपि सन्तीत्यन्वयः। तत्कथमित्याकाङ्क्षायामुत्तरं वाक्यद्वयम्। साङ्ख्यानां योगिनामिति पदद्वयमन्यथाप्रतीतिनिरासाय व्याचष्टे॥ साङ्ख्यानामिति॥ सम्यक्ख्यातिर्ज्ञानं सङ्ख्या। तत्र भवाः साङ्ख्याः। तेषां, ज्ञानिनाम्। ज्ञाननिष्ठानामित्यर्थः। ननु जनकादयोऽपि ज्ञाननिष्ठाः। तत्कथं योगिन इत्यत आह॥ ज्ञाननिष्ठा भवति॥ कर्मयोग्याः गृहस्थादिकर्मयोग्याः।

---

1. ग. ज्ञानसाधनैर्युक्ताः 2. ग. ज्ञानसाधनैर्युक्ताः

साङ्ख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्यातामित्यतो मुक्तिवचनादिति भावेनाह ॥ निष्ठेति ॥ स्थितिः स्वरूपेणेति शेषः । अस्त्वेवं श्लोकार्थः । तथाप्याधिकारिकत्वादिकमत्र न श्रूयत इत्यतोऽध्याहृत्याह ॥ त्वन्त्विति ॥ सकर्मा गृहस्थादिकर्मवान् । भवेदिदं व्याख्यानं यदि ते जनाः प्रमिताः स्युर्येषां ज्ञाननिष्ठानामपि गृहस्थादिकर्मस्वेवाधिकारो न यत्याश्रमकर्मसु । जनकादयस्तु यत्याश्रमं नानुष्ठितवन्त इत्येव प्रमितम् । न तु तत्रानधिकारिण इति तत्राह ॥ सन्ति हीति ॥ निवेशितः कर्माधिकारो गृहस्थकर्माधिकारो यस्मिन् स तथोक्तः । प्रियव्रतो हि यत्याश्रमं स्वीचिकीर्षुराधिकारिकत्वयुक्त्या हिरण्यगर्भेण निवारित इत्यनेनोच्यते ॥ ३ ॥

भ० गी०—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

भा०—

इतश्च नियोक्ष्यामीत्याह ॥ न कर्मणामिति ॥ कर्मणां युद्धादीनामनारम्भेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं न तु कर्माकरणमित्यर्थः । कुतः पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः । यदि कर्माकरणेन मुक्तिः स्यात् स्थावराणां च[1] । न चाकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानामनन्तनां कर्मणां भावात् । न च सर्वाणि कर्माणि[2] भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् । तत्र चैकैकानि कर्माणि भुञ्जन्प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलानि कर्माणीत्यसमाप्तिः । तच्चोक्तं—

---

1. अ. ग. चशब्दो न श्रूयते 2. ग. 'कर्माणि' इति न पठ्यते

"जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जते ॥
चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
अतोऽविच्चा परं देवं मोक्षाशा का महामुने" ॥

इति ब्राह्मे[1]। यदि सादिः स्यात्संसारः पूर्वकर्माभावादतत्प्राप्तिः। अबन्धकत्वं त्वकामेनैव भवति। तच्च वक्ष्यते "अनिष्टमिष्टं" इति।

प्र० दी०—

"न कर्मणाम्" इति मोक्षस्य कर्मसाध्यत्वमुच्यत इत्यन्यथा-प्रतीतिनिरासायाह॥ इतश्चेति॥ स्ववर्णाश्रमोचिते युद्धादाविति शेषः। प्रागाधिकारिकत्वात्त्वया कर्म कर्तव्यमित्युक्तम्। इदानीं को परो हेतु-रुच्यत इत्यतो व्याचष्टे॥ कर्मणामिति॥ अयमभिप्रायः। कर्माणि न कार्याणीति वदन्प्रष्टव्यः। किं ज्ञानं न मोक्षसाधनम्। अपि तु कर्मा-करणमेवेति मत्वा कर्माणि त्यज्यन्ते। उत ज्ञानं मोक्षसाधनं भवत्येव। किन्तु "कर्मणा बध्यते जन्तुः" इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा। आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येद-मुच्यते। अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम्। अकरणे च बीजाभावात्संसारो न भविष्यतीति युक्तिमाश्रित्य। आद्यस्य दूषणं न कर्मणामिति॥ नैष्कर्म्यशब्दस्यान्यथापि व्याख्यानान्नाऽद्य इत्यर्थः। ततः किमित्यत आह॥ ज्ञानमेवेति॥ उक्तमाक्षिप्य समाधत्ते॥ कुत इति॥ नैष्कर्म्यशब्दस्यान्यार्थतामङ्गीकृत्य कर्माकरणस्य मोक्षसाध-नत्वनिराकरणे को हेतुरित्यर्थः। कथमस्य हेतुत्वमित्यतो व्याचष्टे॥ सर्वदेति॥ प्रलयेऽपि सम्भवार्थं स्थूलेन सूक्ष्मेण वेत्युक्तम्। तथापि कथं हेतुत्वमित्यत आह॥ यदीति॥ "स्यात्" इत्यस्य पूर्वोत्तराभ्यां सम्बन्धः। "स्थावराणां" इत्यनधिकृतोपलक्षणम्। ततश्चानादौ संसारेऽनधिकृतदेहस्य सम्भवेन मुक्तिप्रसङ्गादधुनापि दृश्यमानं पुरुषत्वं न स्यादिति भावः। द्वितीयनिरासेऽप्यस्यैवार्धस्य तात्पर्यमाह॥

1. अ. 'ब्राह्मे' इति न पठ्यते

न चेति ॥ कर्माभावात्संसारबीजाभावात् । अत्र नैष्कर्म्यमिति मुक्तिनामैव । न तु परप्रमाणानुवादः । कुतो न भवतीत्यतोऽत्रापि पुरुषत्वादिति हेतुमभिप्रेत्याह ॥ प्रतीति ॥ जन्मनि जन्मनि कृतानामित्यर्थः । पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसम्भवात्तत्र कृतानामनन्तकर्मणां भावात् किमद्याकरणमात्रेण भवतीत्यर्थः । ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि । तत्कुतोऽनन्तकर्मणां भाव इत्यत आह ॥ न चेति ॥ कुतो नेत्यत आह ॥ एकस्मिन्निति ॥ हिशब्दो हेतौ । बहून्यपि भुज्यतां को दोष इत्यत आह ॥ तानि चेति ॥ तानि च कानिचिदिति सम्बन्धः ॥ एकैकानीति ॥ प्रत्येकमित्यर्थः । तथाविधान्यप्यनधिकृतजन्मभिर्भुक्तानीत्यत आह ॥ तत्र चेति ॥ तेषु कर्मसु । भुञ्जन् भुञ्जानः । शेषेण कर्मशेषेण । मानुष्ये चाकरणमसम्भावितमित्याह ॥ ततश्चेति ॥ असमाप्तिर्भोगेनैव कर्मणामिति शेषः । सम्भावनामात्रेणेदमुदितं न तु प्रमितमित्यत आह ॥ तच्चेति ॥ चतुर्दशाद्वर्षात् । अनूनो दशको यस्येति विग्रहः । ह्रस्वदीर्घव्यत्ययेन "चतुर्दशोर्ध्वजीविनी" इति स्त्रिया विशेषणम् । संसारश्चेति कर्मणामनन्तत्वोपपादनम् । अतो भोगेन क्षयासम्भवात् । अविद्वा अविदित्वा । पुरुषशब्देनानादिदेहसम्बन्ध उक्तः । सोऽसिद्ध इत्यत आह ॥ यदीति ॥ अतत्प्राप्तिराकस्मिकस्य संसारस्याप्राप्तिः स्यात् । अतः पुरुषत्वं सिद्धमिति । ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि । तथापि बन्धकानि कथं प्रेक्षावता क्रियेरन् । न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतावताऽद्य क्रियन्त इत्यत आह ॥ अबन्धकत्वं त्विति ॥ कर्मणां बन्धाहेतुत्वं त्वकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेरित्यर्थः । अकामे[1]ऽबन्धकत्वं भगवत्सम्मतमिति भावेनाह ॥ तच्चेति ॥

सङ्करस्त्वकरणमसन्न सन्तं प्रत्यवायं जनयति । "कथमसतस्सज्जायत" इति श्रुतेरित्यवादीत् । तद्भास्करः प्रत्यषेधीत् । द्रव्यविषया श्रुतिः । गुणस्त्वसतोऽपि जायत इति । उभावपि स्थूलदृश्वानौ ।

1. ग. अकामेन

न ह्यकरणमसत्। तथा सति करणप्रसङ्गात्। किन्त्वभावः। स च भाववत्तत्वमेवेति कथमकरणम्। गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत्। न ह्यत्रोपादानत्वं विवक्षितम्। किन्तु निमित्तत्व-मेवेत्यलम्।

भा०—

ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः—

" निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्॥"

इति मानवे। अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह॥ **न चेति**॥ सन्यासः काम्यकर्मपरित्यागः। "काम्यानां कर्मणां" इति वक्ष्य-माणत्वात्। अकामकर्मणामन्तःकरणशुद्ध्या ज्ञानान्मोक्षो भवति। तच्चोक्तं—

" कर्मभिश्शुद्धसत्वस्य वैराग्यं जायते हृदि।"

इति भागवते। विरक्तानामेव च ज्ञानमित्युक्तम्[1]।

" न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचस्समासन्।
स्वप्ने निरुक्त्या गृहमेधिसौख्यं न तस्य हेयानुमितं
स्वयं स्यात्॥" (भा. ५-११-३)

इति। न तु फलाभावात्। कर्माभावात्। अतो न कर्मत्याग एव मोक्षसाधनम्। यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च। अप्रयतत्व-मेव हि प्रायो गृहस्थादीनामितरकर्मोद्योगात्। अप्रयतानां च न ज्ञानम्। तथा हि श्रुतिः "नाशान्तो नासमाहितः" (कठ. २-२३) इति। महांश्च यत्याश्रमे तोषो भगवतः। तथा ह्याह—

" यत्याश्रम[2]तुरीयं तु दीक्षां मम सुतोषिणीम्।"

1. अ. ग. इतिशब्दो न श्रूयते 2. अ. यत्याश्रमं

इति नारायणाष्टाक्षरकल्पे। आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः। स एव च महान् भगवतस्तोषः। तच्चोक्तम्—

"देवादीनामादिराज्ञां महोद्योगेऽपि नो[1] मनः।
विष्णोश्चलति तद्योगोऽप्यतीव हरितोषणम्॥"

इति पाद्मे ॥ ४ ॥

प्र० दी०—

"न च संन्यसनादेव" इति पुनरुक्तम्। अत्रापि कर्मसंन्यसनस्या-मोक्षसाधनत्वोक्तेरित्यत आह ॥ नन्विति ॥ "निष्कामं ज्ञानपूर्वं च" इति मानवे वाक्ये तावन्निष्कामकर्मणा मोक्षः स्मृतः। स चोपपत्त्यन्तरा-दर्शनान्निष्कामकर्मणः फलाभावादित्येव तत्रोपपत्तिरङ्गीकार्या। यत एवं फलाभावस्यैव प्राधान्यमतोऽकरणेऽपि फलाभावस्यैव साम्या-न्मोक्षो भवत्येव। यत्प्राग्भवीयकर्मफलमुक्तं निष्कामकर्मपक्षेऽपि[2] तत्समानम्। न च विनिगमने कारणाभावः। आयासाभावस्य सत्त्वात्। न च प्रत्यवायप्राप्तिः। अमुमुक्षुविषयत्वसम्भवात्। अतो न कर्माणि करोमीति भावः। अनेन कथमस्य परिहार इत्यत आह ॥ संन्यास इति ॥ तेन च निष्कामकर्मकरणमुपलक्ष्यत इति भावः। निष्कामकर्मकरणान्मोक्षं न प्राप्नोति। अतो न तत्प्रतिबन्दीग्रहणं युक्त-मित्यनेनोक्तम्। तथा च स्मृतिविरोध इत्यतस्स्मृतेरभिप्रायमाह ॥ अकामेति ॥ सकाशादिति शेषः। पुंसामिति वा। अकामकर्मभिरन्तः-करणशुद्धिद्वारा ज्ञानं जायत इत्येतत्कुत इत्यत आह ॥ तच्चेति ॥ नन्वत्र वैराग्यं जायत इत्युच्यते, न तु ज्ञानमिति। तत्राह ॥ विरक्तानामेवेति ॥ प्रागपि वैराग्यद्वारेत्यभिमतमिति भावः। तथापि कथं विरोधपरिहारः। गीतायामकामकर्मणां मोक्षसाधनत्वाभावाव-धारणादित्यतस्तदभिप्रायमाह ॥ न त्विति ॥ फलाभावोपपत्तिकं[3] मोक्षसाधनत्वं निषिध्यते। न तु सर्वथाऽपीत्यर्थः। प्रतिबन्दीं मोचयति।

1. ग. भोगिनः 2. ग. निष्कामकरणपक्षे
3. ग. "कर्मणाम्" इत्यधिकः पाठः

कर्माभावादिति ॥ अतः कर्माभावान्न मोक्ष इत्यर्थः । श्लोकतात्पर्यमुपसंहरति ॥ अत इति ॥

ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः । तत्र चेयमेवोपपत्तिर्यत्तद्धर्माणां फलाभावः । अतः तत्साम्यादकरणेऽपि मोक्षो भवतीत्येतच्छङ्कानिरासार्थं चोक्तम् "न च संन्यसनादेवेति"। एवं तर्हि श्रुत्यादिविरोध इत्यत आह ॥ यत्याश्रमस्त्विति ॥ प्रायत्यं प्रयतत्वम् । ईश्वरे मनःसमाधानम् । एतद्द्वारद्वयेन मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम् । फलाभावोपपत्तिकं तु गीतायां निवारितमतो न विरोध इति भावः । आश्रमान्तरेऽपि प्रायत्यसम्भवात्किं तदर्थं यत्याश्रमेणेत्यत आह ॥ अप्रयतत्वमेवेति ॥ इतरकर्मसु यजनादिषु । प्रायत्यं कथं मोक्षसाधनमित्यतो व्यतिरेकमुखेनोपपादयति ॥ अप्रयतानां चेति ॥ "प्रज्ञानेनैनमाप्नुयात्" (कठ. २-२६) इति श्रुतिशेषः । अशांतोऽभगवन्निष्ठः । असमाहितस्तत्र चित्तसमाधानहीनः । भगवत्तोषणस्याऽश्रमान्तरेण[1] सम्भवात्किं यत्याश्रमेणेत्यत आह ॥ महांश्चेति ॥ तुरीयं परमहंसाख्यम् । वाक्यशेषेणान्वयः । यत्याश्रम एव चेत्प्रायत्यं महान् भगवतस्तोषश्च तर्हि तद्रहितानामाधिकारिकाणां तदुभयाभाव इत्यत आह ॥ आधिकारिकास्त्विति ॥ तत्स्थाः अधिकारस्थाः । स एव अधिकार एव । तुष्यत्यनेनेति तोषः । समासान्तविधेरनित्यत्वाद्दादिराज्ञामिति युक्तम् । यथा भाष्ये[2] "शुच्यम्पि तटाकानि" इति ॥ ४ ॥

भ० गी०—

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

भा०—

न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह ॥ न हीति ॥ ५ ॥

---

1. ग. आश्रमान्तरेऽपि  2. ग. यथोक्तं महाभाष्ये

*

प्र० दी०—

ज्ञानरहितात् कर्मत्यागरूपात् यत्याश्रमात्सिद्धिं न समधिगच्छतीति किल पूर्वमुक्तम्। तत्र हेत्वाकाङ्क्षायां "न हि कश्चित्" इत्युच्यत इति व्याख्यानमसदिति भावेन श्लोकतात्पर्यमाह ॥ न त्विति ॥ न ह्यत्र ज्ञानस्यावश्यकत्वे किञ्चिदुच्यते। नापि यज्ञादिकर्माकरणस्यासम्भवोऽभिधीयते। येन प्रकृतसङ्गतिस्स्यात्। किन्तु शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वम्। अतो नेदं व्याख्यानम्। अपि तर्हि "कर्मणा बध्यते जन्तुः" इति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तमाशङ्क्य "यज्ञार्थात्" इति स्मृतेरर्थसङ्कोचं वक्ष्यति। तत्र कुतः स्मृतेरर्थसङ्कोच इत्याकाङ्क्षा स्यात्। तामपाकर्तुमुपोद्धातन्यायेन कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं कर्माणि सर्वात्मना त्यक्तुं नैव शक्यानीत्यनेनाहेति भावः ॥ ५ ॥

भ० गी०—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारस्स उच्यते ॥६॥**
**यस्त्विन्द्रियाणि मनसा नियम्याऽरभतेऽर्जुन।**
**कर्मेन्द्रियैः कर्मयोगमसक्तस्स विशिष्यते ॥ ७ ॥**

भा०—

तथापि शक्तितस्त्यागः कार्य इत्याह ॥ **कर्मेन्द्रियाणीति** ॥ मन एव प्रयोजकमिति दर्शयितुमन्वयव्यतिरेकावाह **मनसा स्मरन् मनसा नियम्येति**। कर्मयोगं स्ववर्णाश्रमोचितम्। न तु गृहस्थकर्मैवेति नियमः। संन्यासादिविधानात्[1]। सामान्यवचनाच्च ॥ ६ ॥ ७ ॥

---

1. अ. न्यासादिविधानात्

प्र० दी०—

तथापि "कर्मेन्द्रियाणि" इत्यसङ्गतम्। तृतीयपक्षस्थेन मनसेन्द्रियार्थस्मरणस्यानुक्तत्वादित्यत आह ॥ तथाऽपीति ॥ यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुमशक्यानि। तथापि शक्तितः शक्यत्वाद्यज्ञादिकर्मणां त्यागः कार्यः। एतदुक्तं भवति। नाशक्यविषये शास्त्रप्रवृत्तिरित्यतस्तद्व्यतिरिक्तकर्मार्थः स्मृतो कर्मशब्दो भविष्यतीति। एतच्छङ्कापरिहारः श्लोके न दृश्यते। द्वितीयश्लोकश्च व्यर्थ इत्यत आह ॥ मन एवेति ॥ मन एव बन्धमोक्षयोः प्रयोजकम्। न कर्मकरणाकरणे। अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुमित्यर्थः। अनिगृहीतत्वे मनसो बन्धापेक्षयाऽद्योऽन्वयः। द्वितीयो व्यतिरेकः। मोक्षापेक्षया तु व्यत्यास इति। एतेन स्मरणस्य मानसत्वाव्यभिचारात् "मनसा" इति व्यर्थमित्यपि परास्तम्। "कर्मयोगेन योगिनां" इत्यत्र कर्मयोगशब्दस्य गृहस्थादिकर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात्। तन्निरासार्थमाह ॥ कर्मयोगमिति ॥ गृहस्थकर्मैव वनस्थकर्मैव ब्रह्मचारिकर्मैवेति नियमो न विवक्षित इत्यर्थः। "संन्यासादि" इत्यादिपदेन यो नियम्यते तद्व्यतिरिक्तग्रहणम्। कर्मयोगशब्दस्य सामान्यवाचित्वाच्च। पूर्वं "ज्ञानयोगेन साङ्ख्यानाम्" इति यत्याश्रमकर्मणः पृथगुक्तत्वात्सामान्यशब्दोऽपि विशेषे व्यवस्थितः। न चात्र तथाविधं किञ्चिदस्तीति भावः ॥ ६ ॥ ७ ॥

भ० गी०—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

भा०—

अतो नियतं स्ववर्णाश्रमोचितं कर्म कुरु ॥ ८ ॥

प्र० दी०—

उत्तरश्लोकपर्यालोचनया चैवमेवेति भावेन सङ्गतिं सूचयन्

व्याचष्टे ॥ अत इति ॥ अतश्शब्दपरामर्श्यं "कर्म ज्यायः" इत्यादिनैवोच्यते ॥ ८ ॥

**भ० गी०—**

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९ ॥**

भा०—

"कर्मणा बध्यते जन्तुः" इति कर्म बन्धकं स्मृतमित्यत आह ॥ **यज्ञार्थादिति** ॥ कर्म बन्धनं यस्य लोकस्य स कर्मबन्धनः । यज्ञो विष्णुः । यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः । "मुक्तसङ्गः" इति विशेषणात् । "कामान्यः कामयते" (मुं. ३-२-२) इति श्रुतेश्च । "अनिष्टमिष्टं" इति वक्ष्यमाणत्वाच्च । "एतान्यपि तु कर्माणि" इति च । "तस्मान्नेष्टियाजुकः स्यात्" (बृ. १-५-२) इति च । विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥ ९ ॥

प्र० दी०—

इदानीं तृतीयपक्षमाशङ्क्य तत्परिहाराय श्लोकमवतारयति ॥ कर्मणेति ॥ बन्धकं मोक्षस्य प्रतिबन्धकम् । अतो न करोमीति शेषः । तत्पुरुषभ्रान्तिनिरासायाह ॥ कर्मेति ॥ तत्पुरुषत्वेऽसङ्गतिः स्यादिति भावः । यज्ञशब्दस्य यागार्थत्वप्रतीतिमपाकर्तुमाह ॥ यज्ञ इति ॥ अवैष्णवयागस्यापि बन्धकत्वादिति भावः । तदर्थमित्युत्तरवाक्यस्यासङ्गतिपरिहारायार्थात्सिद्धं पूर्ववाक्यार्थमाह ॥ यज्ञार्थमिति ॥ सङ्गरहितमित्यनुक्तं कस्मादुक्तमित्यत आह ॥ मुक्तेति ॥ इष्टियाजुकः फलेच्छया यष्टा ।

ननु कर्मणा बध्यते जन्तुरित्यपि विशेषवचनम् । अविद्यादीनामनेकेषां बन्धकत्वेनाविद्यादिभिरिति सामान्यस्यानुपात्तत्वात् । गीतावाक्यं "न कर्म बन्धकं" इतीदमपि विशेषवचनम् । तत्कथं तत्परि-

द्वारायावतार्य व्याख्यातमित्यत आह ॥ विशेषेति ॥ यद्यप्युक्तविधया द्वयोर्विशेषवचनत्वं समम्। तथापि गीतावाक्ये "यज्ञार्थात्" इत्यादिविशेषणमतिरिच्यते[1]। अतस्तदपेक्षया तत्सामान्यवचनमेव। अतो युक्तमेतद्व्याख्यानमिति भावः।

अयमत्र प्रत्युत्तरक्रमः। "कर्मणा बध्यते" इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः। तस्यावैष्णवकाम्यकर्मविषयत्वात्। कुतः सङ्कोच इति चेत्। परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेनासङ्कुचितार्थतायाः स्वीकर्तुमशक्यत्वात्। तद्धेत एव बाधकाच्छरीरयात्रार्थकर्मव्यतिरिक्तविषयत्वं कल्प्यत इति चेन्न। वैयर्थ्यात्। एवमपि मनोव्यापारस्यात्यक्तत्वेन प्रतिबन्धकाभावो न सिध्यति। तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वावधारणात्। बाधकात्सङ्कोचमङ्गीकुर्वतां चायमपि सङ्कोचोऽङ्गीकार्यः। विधानसामर्थ्याद्युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात्। न च विधानस्यामुमुक्षुविषयत्वम्। कल्पकाभावात्। न चेदमेव वाक्यं कल्पकम्। तस्यावैष्णवत्वादिधर्मत्यागेन चरितार्थत्वात्। धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात्। अतो न कर्मस्वरूपं त्याज्यमिति ॥ ९ ॥

भ० गी०—

सहयज्ञाः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥
देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

1. ख. ग. विशेषणमुच्यते

**यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥**

भा०—

अत्रार्थवादमाह ॥ **सहयज्ञा इति** ॥ १०–१३ ॥

प्र० दी०—

"सहयज्ञा" इत्यदेर्न प्रकृतेन[1] सङ्गतिर्दृश्यते । अत आह ॥ अत्रेति ॥ वर्णाश्रमोचितस्य कर्मणः सर्वथा कर्तव्यत्वे । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ॥ १०–१३ ॥

**भ० गी०—**

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

भा०—

हेत्वन्तरमाह ॥ **अन्नादिति** ॥ यज्ञः पर्जन्यान्तत्वात् तत्कारणमुच्यते । पूर्वयज्ञविवक्षायां चक्रप्रवेशो न भवति । तद्व्यापाद्यं कर्मविधये । न तु साम्यमात्रेणेदानीं कार्यम् । मेघचक्राभिमानी च पर्जन्यः । तच्च यज्ञाद्भवति ।

"अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"

इति स्मृतेः[2] । उभयवचना[3]दादित्यात्समुद्राच्चाविरोधः । अतश्च यज्ञात्पर्जन्योद्भवस्सम्भवति । यज्ञो देवतामुद्दिश्य द्रव्यत्यागः कर्मेतरक्रिया ॥ १४ ॥

प्र० दी०—

"अन्नात्" इत्यादेः सङ्गतिमाह ॥ हेत्वन्तरमिति ॥ अत्रेत्यनु-

1. ग. प्रकृते 2. क. ग. स्मृतेश्च 3. ग. उभयवचनाच्च

वर्तते। अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ। तत्रादित्यस्य पूर्वसिद्धस्य कथं "यज्ञाद्भवति पर्जन्यः" इति यज्ञः कारणत्वेनोच्यत इत्यत आह॥ यज्ञ इति॥ यद्यपि यज्ञो देवतामुद्दिश्य द्रव्यत्याग इति वक्ष्यति। तथाऽप्यत्र परित्यज्यमानं द्रव्यं गृह्यते। तस्य पर्जन्यान्नत्वात् पर्जन्योपभोग्यत्वात्। उपभुक्तेन च तस्य बलाद्युपचयाद्यज्ञः तस्य पर्जन्यस्य कारणमुच्यते। ननु पर्जन्यो देवतात्मा येन यज्ञेन पर्जन्यत्वं प्राप्तः स यज्ञो विवक्षितोऽत्रास्तु। तथा सति यज्ञात्पर्जन्योद्भवो मुख्य एव सम्पत्स्यत इति। नेत्याह॥ पूर्वेति॥ तस्य पर्जन्यपदप्राप्तिहेतोर्यज्ञस्येति शेषः। ननु तदा चक्रं प्रवृत्तमेव। अतः कथं पूर्वयज्ञस्य चक्राप्रवेश इत्यत आह॥ तद्धीति॥ तच्चक्रमापाद्यं ह्यत्र विवक्षितम्। न तु प्रागापादितम्। कुतः? कर्मविधये ह्येतदुच्यते। यदि विहितं कर्म करिष्यसि तदा जगच्चक्रप्रवृत्तिर्भविष्यति। अन्यथा तद्विघातः। अतस्त्वया कर्म कर्तव्यमिति। कर्मविध्युपयोगिता चापाद्यस्यैव। न त्वापादितस्य। आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः।

प्राक्पर्जन्येन कर्म कृतम्। तेन च यज्ञादिद्वारा चक्रं प्रवृत्तम्। अतस्त्वयापि कर्म कर्तव्यमित्येवं प्रागापादितचक्रोक्तिरपि कर्मविध्युपयोगिनी भवतीति चेन्मैवम्। अत इति कोऽर्थः। त्वत्कर्मणापि चक्रप्रवृत्तिसम्भवादिति वा कर्मत्वादिति वा। नाद्यः। इदानीन्तनपुरुषकर्मजेन यज्ञेन पर्जन्योत्पत्त्यसम्भवेन चक्राप्रवृत्तेः। न हि सर्वेऽपि कर्मकारिणः पर्जन्यत्वं प्राप्नुवन्ति। द्वितीयं दूषयति॥ न त्विति॥ फलरहितेन कर्मत्वसाम्ये[1]नेदानीं कर्म कार्यं न भवति स्वयं क्लेशरूपत्वादिति।

प्रकारान्तरेणापि "यज्ञाद्भवति पर्जन्यः" इत्येतद्घटयितु[2]माह॥ मेघेति॥ चक्रं समूहः। ततः किमित्यत आह॥ तच्चेति॥ मेघचक्रम्। कुत इत्यत आह॥ अग्नाविति॥ "ननु स्वकीयमुदकं नद्यः" इति समुद्राद्वृष्टिरुच्यते। अत आदित्याद्वृष्ट्यङ्गीकारे तद्विरोधः स्यादित्यत

1. ग. कर्मत्वसामान्येन　　2. ग. दर्शयितुं

आह ॥ उभयेति ॥ वृष्ट्यङ्गीकारादिति शेषः । वर्षुका[1] मेघा इह वृष्टिशब्देनोच्यन्ते । अतोऽपि किमित्यत आह ॥ अतश्चेति ॥ प्राक् पर्जन्यस्य भवनं गौणमङ्गीकृत्य व्याख्यातम् । इदानीं त्वभिमन्यमानगतस्या[2]भिमानिनि लक्षणामाश्रित्येति भेदः । यद्वाऽभिमानिगतस्य पर्जन्यशब्दस्याभिमन्यमाने लक्षणामाश्रित्य द्वितीयं व्याख्यानम् । तात्पर्यनिर्णये तु मेघसन्ततौ पर्जन्यशब्दो यौगिकोऽङ्गीकृतः । ननु यज्ञः कर्मात्मकः । तत्कथमुच्यते "यज्ञः कर्मसमुद्भवः" इति । तत्राह ॥ यज्ञ इति ॥ इतरक्रिया यज्ञाङ्गभूता । अपूर्वाङ्गीकारे रूढित्यागेन लक्षणाश्रयणां स्यात् ॥ १४ ॥

**भ० गी०—**

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

**भा०—**

कर्म ब्रह्मणो जायते 'एष ह्येव साधु कर्म कारयति' 'बुद्धिर्ज्ञानं" इत्यादिभ्यः । न च मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम् । न च जडानां स्वतः प्रवृत्तिस्सम्भवति । "एतस्य वाऽक्षरस्य" इत्यादिसर्वनियमनश्रुतेश्च । "द्रव्यं कर्म च कालश्च" इत्यादेश्च । अचिन्त्यशक्तिश्चोक्ता । जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा । 'न कर्तृत्वं' इत्यादिनिषेधाच्च ।

**प्र० दी०—**

कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यमिति परेषां व्याख्यानमसदिति भावेनाह ॥ कर्मेति ॥ ब्रह्मणः परब्रह्मणः । कुत इत्यत आह ॥ एष हीति ॥ अपव्याख्यानं प्रत्याख्याति ॥ न चेति ॥ उद्भवशब्दस्य मुख्येऽभिधेये जन्मनि सम्भाव्यमाने सत्यौपचारिकं प्रकाशनमर्थतया न

1. ग. वार्षुकाः (वार्षिकाः) 2. ग. अभिमन्यमानगतस्य भवनस्य

कल्प्यम्। तथा ब्रह्मशब्दस्य मुख्येऽभिधेये परे ब्रह्मणि सम्भाव्यमाने सत्यौपचारिकममुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यम्।

किं चैवं व्याचक्षाणेनापि वेदस्य कर्मप्रकाशकत्वमन्तर्यामिद्वारा परम्परयाऽङ्गीकार्यम्। तथाचान्ततोऽपि परब्रह्मण्यङ्गीकार्ये शब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्नः। ननु वेदः स्वयमेव कर्म प्रकाशयति। किं परब्रह्मणा। अतो न परम्परेत्यत आह॥ न चेति॥ न केवलं वेदस्य जडत्वादन्याधीनत्वं, किं त्वागमाद्विष्णवधीनत्वं सिद्ध[1]मित्याह॥ एतस्येति॥ विष्णोरिति शेषः। ननु शब्दस्यार्थप्रकाशनं स्वभावः। न त्वागन्तुको व्यापारः। यथाऽग्नेरौष्ण्यम्। ततो जडत्वेऽपि न परापेक्षेत्यतः स्वभावस्यापि भगवदधीनत्वे प्रमाणमाह॥ द्रव्यमिति॥ एतत्प्रमाणसिद्धमपि स्वभावनियमनं विष्णोरसम्भावितमित्यत आह॥ अचिन्त्येति॥ यदि जडस्य न स्वतः प्रवृत्तिः तर्ह्यभिमानिदेवता-द्वाराऽस्तु। तथा च नान्ततोऽपि परब्रह्माङ्गीकार इत्यत आह॥ जीवस्य चेति॥ ततश्चाधिक्येन परम्परेति भावः। न केवलं प्रति-बिम्बत्वाज्जीवस्य स्वतः प्रवृत्त्यभावः। किन्त्वागमाच्चेत्याह॥ नेति॥

भा०—

अक्षराणि प्रसिद्धानि। तेभ्यो ह्यभिव्यज्यते परं ब्रह्म। अन्यथाऽनादिनिधनमचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति। न च रूढिं विना योगाङ्गीकारो युक्तः। परामर्शाच्च "तस्मात्सर्वगतं ब्रह्म" इति। न ह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्र-चिदुच्यते।

प्र० दी०—

"ब्रह्माक्षरसमुद्भवं" इत्यस्य "ब्रह्म वेदो अक्षरात्परब्रह्मणो जायते" इति परेषां व्याख्यानमसदिति भावेनाह॥ अक्षराणीति॥ प्रसिद्धा-कारादीनि नियतानुपूर्वीविशिष्टानि। वेद इति यावत्। ननु समुद्भव-शब्दस्य मुख्यार्थाङ्गीकारे किं बाधकम्। येनाभिव्यज्यत इत्यमुख्योऽर्थः।

1. ग. प्रसिद्धं

स्वीक्रियते। किं च प्रमाणान्तरेणापि ब्रह्माभिव्यक्तिसम्भवात् "तेभ्यः" इति किमर्थमुक्तमित्यत आह ॥ अन्यथेति ॥ व्यक्त्यर्थत्वानङ्गीकारे। अनादिनिधनं ब्रह्म कथं जायेत इति शेषः। तथा वेदस्य तदभिव्यञ्जकत्वानङ्गीकारे परिपूर्णत्वादचिन्त्यं ब्रह्म को जानाति। वाक्यार्थद्वयसमुच्चयेऽपिशब्दः। समुद्भवशब्दस्य मुख्यार्थलाभात्परोक्तार्थः किं न स्यादित्यत आह ॥ न चेति ॥ ब्रह्मशब्दो हि परब्रह्मणि रूढः। वेदे तु बृहत्त्वयोगेन प्रवृत्तः। तथाऽक्षरशब्दो वर्णेषु रूढः। ब्रह्मणि[1] त्वक्षरणयोगेन प्रवृत्तः। तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः स्यात्। तच्च न्यायबाह्यमित्यर्थः। इतश्च ब्रह्मशब्दः परब्रह्मवाचीत्याह ॥ परामर्शाच्चेति ॥ उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शाच्च पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते। तथाचाक्षरशब्दोऽप्यर्थाद्वेदवचनो भविष्यतीति भावः[2]। प्रागक्षरशब्दोक्तं परब्रह्मेदानीं ब्रह्मशब्देन परामृश्यते। अतः पूर्वो[3] ब्रह्मशब्दो वेदार्थ एवेत्यत आह ॥ न हीति ॥ एतस्मिन्नेव प्रकरण इति शेषः। "अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः" इत्यादिव्यावृत्त्यर्थं "भेदश्रुतिं विना" इत्युक्तम्। श्रुतिशब्दश्च प्रमाणोपलक्षणार्थः। अत्रापि सर्वगतमिति विशेषणमस्तीति चेन्न। वर्णानामपि सर्वगतत्वात्। विकारत्वान्नेति[4] चेन्न। अनन्तरमेव निराकरणात्। इदं च भास्करं प्रत्यभिहितम्।

भा०—

तानि चाक्षराणि नित्यानि। "वाचा विरूप नित्यया"।
"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा"।

"अत एव च नित्यत्वं" इत्यादिश्रुतिस्मृतिभगवद्वचनेभ्यः। दोषाश्चोक्ताः सकर्तृकत्वे। न चाबुद्धिपूर्वमुत्पन्नानि। तत्प्रमाणाभावात्। निश्वसितशब्दस्त्वक्लेशाभिप्रायो नाबुद्धिपूर्वाभिप्रायः। "सोऽकामयत" इत्यादेश्च। इष्टं हुतमादित्यादिरूपप्रपञ्चेन सहाभि-

1. ग. परब्रह्मणि 2. ग. शेषः 3. ग. पूर्वोक्तो
4. क. ख. विकारित्वात्

धानाच्च। महातात्पर्यविरोधाच्च। तच्चोक्तं पुरस्तात्। न ह्यस्वातन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम्। अस्वातन्त्र्यं च तदभिमतिपूर्वकत्वे न भवति। यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि।

प्र० दी० —

मायावादिना तु प्राग्ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्श इत्यङ्गीकृतत्वाद्यद्प्यन्यथाव्याख्याने समुद्भवशब्दस्य मुख्यार्थतालाभ इत्यभिप्रेतं तदपि दुराशामात्रमित्याह ॥ तानि चेति ॥ यान्यस्माभिः प्रसिद्धानि व्याख्यातानि। अनेनाभिधानादिबलाद्ब्रह्माक्षरशब्दौ द्वावप्युभयत्र योगरूढाविति प्रत्यवस्थानमपि परास्तम्। परामर्शस्य वर्णनित्यत्वस्य चापरिहार्यत्वात्।

न केवलं श्रुत्यादिभ्यो वेदस्य नित्यत्वं, किं तर्हि विपक्षे बाधकाच्चेत्याह ॥ दोषाश्चेति ॥ "रचितत्वे च धर्मप्रमाणस्य" इत्यत्र। ननु वेदाक्षराणि ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नानि। अतो न विपर्ययादिमूलत्वशङ्केत्यत आह ॥ न चेति ॥ "निश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वे प्रमाणमिति चेत्। किमयं निश्वसितशब्दोऽबुद्धिपूर्वमुत्पन्नत्वस्य वाचक उत निश्वसितमिव निश्वसितं, इवार्थश्चाबुद्धिपूर्वमुत्पन्नत्वमिति गौण्या वृत्त्या तदभिप्रायः। नाद्यः। प्रमाणाभावात्। द्वितीयं दूषयति॥ निश्वसितेति ॥ अक्लेशेन निस्सरणस्यापीवार्थस्य सम्भवेन निश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाबुद्धिपूर्वोत्पत्त्यभिप्रायत्वनिश्चय इत्यर्थः। न च परस्येवास्माकमपि निश्चयायोग इति भावेनाह ॥ स इति ॥ "सोऽकामयत स इदं सर्वमसृजत" इति ब्रह्मणः सर्वसृष्टेरिच्छापूर्वकत्वमुच्यते। इच्छा च बुद्ध्यविनाभूता। अतो न किञ्चिद्ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नमिति। ननु निश्वसितमेतत्" इति श्रुतिः नामप्रपञ्चस्याबुद्धिपूर्वमुत्पत्तिं वक्ति। "सोऽकामयत" इति रूपप्रपञ्चस्येच्छापूर्वमित्यतो न विरोध इत्यत आह ॥ इष्टमिति ॥ एवं सति "निश्वसितं" इति श्रुतौ

"इष्टं हुतमाशितं[1] पायितमयं च लोकः परश्च लोकः"।

---

1. ख. आसितम्

इति नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानाद्रूपप्रपञ्चस्यापि निश्वसितशब्देनाबुद्धिपूर्वोत्पन्नत्वप्राप्तौ "सोऽकामयत" इति श्रुतिर्निर्विषयैवापद्येतेति भावः। इतोऽपि नाबुद्धिपूर्वा ब्रह्मणः सृष्टिरित्याह॥ महातत्पर्येति॥ ब्रह्मणः सर्वोत्तमत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्चेत्यर्थः। तदेव कुत इत्यत आह॥ तच्चेति॥ उक्तं साधितम्। कथं तद्विरोध इत्यत आह॥ न हीति॥ प्राधान्यं सर्वोत्तमत्वम्। अस्वातन्त्र्येणोत्पत्तिकर्तृत्वस्य प्राधान्यविरोधित्वेऽप्यबुद्धिपूर्वमुत्पादकत्वस्य किमायातमित्यत आह॥ अस्वातन्त्र्यं चेति॥ कार्यस्य पुरुषमतिपूर्वकत्वाभावे[1] तत्र तस्य पुरुषस्यास्वातन्त्र्यं भवति। तत्र दृष्टान्तमाह॥ यथेति॥ रोगादीनां पुरुषजत्वेऽपि बुद्धिपूर्वकत्वाभावात्तत्र पुरुषस्यास्वातन्त्र्यं यथेत्यर्थः। ततश्चाबुद्धिपूर्वमुत्पादकत्वादस्वातन्त्र्यम्। अस्वातन्त्र्यादप्राधान्यं प्रसज्येत। तथा च महातात्पर्यविरोध इत्युक्तं भवति। साक्षात्प्रसङ्गसम्भवेऽपि[2] व्युत्पादनार्थमेवमुक्तम्।

भा०—

उत्पत्तिवचनान्यभिव्यक्त्यर्थान्यभिमानिदेवताविषयाणि च। नित्येत्युक्त्वा उत्सृष्टेति वचनात्। अभिव्यञ्जके कर्तृवचनं चास्ति। 'कृत्स्नं शतपथं चक्रे' इति। कथमादित्यस्था वेदाः तेनैव क्रियन्ते। वचनमात्राच्च निर्णयात्मकशारीरकोक्तं बलवत्। शास्त्रं योनिः प्रमाणमस्येति[3] तु शास्त्रयोनित्वम्। "जन्माद्यस्य" इत्युक्ते प्रमाणं हि तत्रापेक्षितं, न तु तस्य जातत्वं वेदकारणत्वं वा। न हि वेदकारणत्वं जगत्कारणत्वे हेतुः। न हि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे। न च सर्वज्ञत्वे। यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा[4]। तस्माद्वेदप्रमाणकत्वमेवात्र विवक्षितम्। अतो नित्यान्यक्षराणि। यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म तस्मान्नित्यं यज्ञे प्रतिष्ठितम्॥ १५॥

---

1. ख. पुरुषमतिपूर्वकत्वाभावात् 2. ख. सङ्गतिसम्भवेऽपि

3. ग. "इति तु" इत्यस्य स्थाने "तत्" इति पठ्यते

4. ग. "जगत्स्रष्टा" इत्यतः परं "सर्वज्ञः" इत्यधिकः पाठः

प्र० दी०—

ननु वेदनित्यत्ववत्तदुत्पत्तावपि "ऋचः सामानि जज्ञिरे" इत्यादिवचनानि सन्ति। तत्कथं निर्णय इत्यतो विपक्षे बाधकोपेतानां नित्यत्ववाक्यानां प्राबल्यादुत्पत्तिवचनान्यन्यथा व्याख्येयानीत्याह॥ उत्पत्तीति॥ उत्पत्तिवाची शब्दोऽभिव्यक्तौ क्व दृष्ट इत्यत आह॥ नित्येति॥ अनादिनिधनतया नित्या न तूपचारेणेति मुख्यं नित्यत्वमुक्त्वा पुनरुत्सृष्टेत्युच्यते। तत्र गत्यन्तराभावाद्व्यक्तिरेव ग्राह्येत्यर्थः। अन्यत्रापि प्रयोगं दर्शयति॥ अभिव्यञ्जक इति॥ शतपथाभिव्यञ्जकतया निश्चिते याज्ञवल्क्ये कर्तृशब्दोऽस्तीत्यर्थः। याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यादित्यत आह॥ कथमिति॥ प्रागादित्ये स्थितास्ततो याज्ञवल्क्येनाधीता इत्येतत्प्रमितमित्यर्थः। इतोऽपि नित्यत्वपक्ष एव बलवानित्याह॥ वचनेति॥ "ऋचः सामानि" इत्यादिकं वचनमात्रम्। "अत एव च नित्यत्वं" इति शारीरकोक्तं वाक्यं निर्णयात्मकम्। वचनं च वृत्त्यन्तरेणापि सम्भवति। न तूपचरितो वाक्यार्थावधारणात्मकोऽपि[1] निर्णयः। अतस्तस्मादिदं बलवदित्यर्थः।

नन्नु शारीरक एव[2] "शास्त्रयोनित्वात्" इति ब्रह्मणो वेदकारणत्वमुच्यत इत्यत आह॥ शास्त्रमिति॥ ननु तत्पुरुषं परित्यज्य को[3] बहुव्रीहिरङ्गीक्रियते। तथात्वे च ब्रह्मणो वेदाज्ञातत्वं प्रसज्येतेत्यत आह॥ जन्मादीति॥ लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः। तत्र "जन्माद्यस्य" इति सूत्रेण लक्षणेऽभिहिते कुतः प्रमाणादेवं प्रतिपत्तव्यमिति ब्रह्मणो जगज्जन्मादिकारणत्वे प्रमाणाकाङ्क्षा स्यात्। न तु तस्य वेदाज्ञातत्वं वेदकारणत्वं वाऽऽकाङ्क्षितम्। आकाङ्क्षादिवशाच्च वाक्यार्थोऽवसेयः। अतो योनिशब्दं प्रमाणवचनमङ्गीकृत्य बहुव्रीहिरेवायं प्रतिपत्तव्यो न[4] तत्पुरुषः। वेदकारणत्वं जगत्कारणत्वे हेतुत्वेनात्रोच्यते। तेन[5] नानाकाङ्क्षिताभिधानमेतदित्यत आह॥ न हीति॥ अन्वया-

1. ग. अपिशब्दो न श्रूयते　　2. ग. एवशब्दो नास्ति

3. ख. ग. कुतो　　4. ख. न तु तत्पुरुषः　　5. ख. ततः

